शब्दाः—धातवः—प्रत्ययाः—अर्थाः ।
वीध्रम्, वि+इन्धी+कन्=विमलार्थकम् ।
वीरः, अज+रक्=शूरः ।
वृजिनम्, वृजी+किनः=कल्मषे, केशे, कुटिले च ।
वृत्रः, वृतु+रक्=रिपौ, ध्वनौ, ध्वान्ते, शैले, चक्रे, दानवे च ।
वृषभः, वृषु—कभः=वृषः ।
वृषलः, वृष+कलः=तुरगः, शूद्रश्च ।
वृषा, वृष+कन्=कर्णे, महेन्द्रे च ।
वृष्णिः, वृषु+निक्=यादवः, मेषः, पाषण्डः, चण्डो वा ॥
वेणुः, अज+णुः=वंशः, राजविशेषो वा ।
वेतनम्, वी+तनः=भृतिः ।
वेतसः, वेञ्+असः=वृक्षभेदः ।
वेधाः, वि+धाञ्+असिः=विधाता+ईश्वरो वा
वेमा, वेञ्+मन्=तन्तुवायदण्डः ॥
वेशन्तः, विश+अन्तः=पल्वलम्
वेहत्, वि+हनः—अतृ=गर्भोपघातिनी ।
व्योम, व्येञ्+मन्=अन्तरिक्षम् ॥
शकटम्, शकि+अटः=यानविशेषः, ऋषिर्वा । शकटोऽपि ॥
शकलम्, शक्लृ+कलः=त्वचि, खण्डे, मत्स्यभेदे वा ।
रागवस्तुनि, वल्कले च ॥ शाकली-मत्स्यः।
शकुनः, शक्...उनः=पक्षिमात्रे, पक्षिविशेषे वा
शकुन्तः, शक्...उन्त=पक्षिमात्रे, पक्षिविशेषे वा ।
शकुन्तिः, शक्...उन्तिः=पक्षी ।
शकुनिः, शक्...उनिः=
शकृत्, शक्लृ...ऋत्=उच्चारः ॥
शक्रः, शक्लृ...रक्=देवराजः कुटजवृक्षश्च ।
शक्लः, शक...कलः=प्रियंवदः ।
शङ्कुः, शकि—कुः=कीले, गरे, शस्त्रे, संख्यायाम्, पादपभेदे, पापे, पादभेदे, स्थाणौ शल्ये च
शङ्खः, शमु—खः=निधिभेदः, ललाटास्थि, कम्बुश्च ।
शण्ढः, शमु—ढः=गोपतौ, आकृष्टाण्डे, वर्षधरे, तृतीयप्रकृतौ च ।

शब्दाः—धातवः—प्रत्ययाः—अर्थाः ।
शतद्रुः, शत-द्रु-कुः=नदीभेदो गङ्गा वा ।
शत्रिः, शद्लृ-त्रिः=अम्भोधरः, विष्णुश्च ॥
शपथः, शप—अथः=शान्तिः, निश्चयकरणं वा ।
शबलः, शप—कलः ॥
शत्रुः, शद्लृ—त्रि—रुः=वैरी ।
शब्दः, शो—दः=निनादः ।
शमथः, शमु—अथः=शान्तिः, मन्त्री ।
शमलम्, शमु—कलः=अशुद्धम् ॥
शम्बः, शमु—वः=मुसलस्य लोहमुखम् ॥
शम्बुकः, शमु—उकः=शम्बूकः ॥
शम्बूकः, शमु—ऊकः=गजकुम्भान्ते, घोषे, शूद्रतापसे च ॥
शयुः, शीङ्—उः=शयनशीलः ।
शरभः, शॄ-अभ=आरण्यकहिंस्रपशुभेदः ।
शरत्, शॄ—अदिः=वत्सरे, ऋतौ, च ।
शरीरम्, शॄ—ईरः=विग्रहः ।
शरु-शॄ—उः=आयुधं कोपो वा ।
शर्करा, शॄ—करः—आप्=खण्डविकारः, मृद्विकारो वा ।
शर्वः, शॄ—वः=रुद्रः ।
शर्वरी, शॄ—ष्वरः=ङीप्=यामिनी ।
शलभः, शल—अभः=पतङ्गः ।
शल्यम्, शल-यः=शस्त्रविशेषः, वाणाग्रभागो वा ।
शष्पम्, शसु—पक्=बालतृणम् ।
शादः, शो—दः=कर्दमो बालतृणं वा ।
शार्ङ्गः, शॄ—गक्=पक्षी ।
शालूकम्, शल—ऊकः=मूलद्रव्यम् ॥ कुवेरवादीनां कन्दः ।
शास्तिः, शास—तिः=राजदण्डः ॥
शिक्यम्, स्रंसु—यः=प्रसिद्धार्थः ॥
शिखा, शीङ्—खः—आप्=चूडाकेशभेदः, ज्वाला वा ॥
शितिः, शतिसौत्री धातुः-किः=कृष्णः, शुक्लो वा ॥
शिथिलम्, श्रथः-किरः=श्लथम् ।
शिबिरम्, शीङ्-किरः=सेनानिवेशः, स्थानं वा ।
शिरः, श्रिञ्-असुः=शीर्षम् ॥
शिल्पम्, शील-पक्=कौशलम्।

शब्दाः—धातवः-प्रत्ययाः-अर्थाः ।

शिशिरम् , शश-किरः = ऋतुभेदे, षतुारे, शीतले च ।

शिशुः, शो-कुः=बालकः ।

शीधुः, शीङ्-धुक्=आसवः ।

शिरीषः, शॄ-कीषः = वृक्षविशेषः ।

शीलम् , शीङ्-लक्=स्वभावः ।

शुक्षिः, शुष-क्सिः = वातः ।

शुचिः, शुच-किः=शुद्धिः । ग्रीष्मावसानं वा ।

शुल्बम् , शुच-वः = ताम्रम् ॥

शुक्रः, शुच-क्रः = भार्गवे, ज्येष्ठमासे, वैश्वानरे, (क्ली) रेतसि च ।

शुक्लः, शुच-क्लः=सिते, योगान्तरे (क्ली०) रजते च ।

शुभ्रम् ,शुभ-रक्=अभ्रके, उद्दीप्तश्वेते ।

शुषिरम् , शुष-किरः = वंशादिवाद्ये, विवरे च ।

शुष्मम् , शुष्-मः=तेजः [पुं० ] वायुः ।

शूद्रः, शुच-रक् = अन्त्यजातिः

शूर्पम् , शॄ-पक् = अन्नशोधकं पात्रम् , मानभेदो वा ।

शूरः, शु-क्रः=पादपे, भटे, सूर्ये च ।

शृङ्गम् , शॄ-गक् = प्रभुत्वे, शिखरे चिह्ने, क्रीडाम्बुयन्त्रके विषाणे उत्कर्षे, स्वर्णे, मानभेदे च ।

शृङ्गारः, शॄ-आरः = सुरते, नाट्य, रसे, गजमण्डने ॥

शेपालम् , शीङ्-पालः=जलनीलिका ।

शेवालम् , शीङ्-वालः=शैवलः ॥

शैवलम् , शीङ्-वलञ्=पद्मकाष्ठम् ॥

शैवालम् , शीङ्-वालञ्=जलनेली ॥

शोचिः, शुच-इः=दीप्तिः ।

शोथः, शु-थः = श्वयथुः ।

शेवलः, शीङ्-वलः=जलनेली ।

श्मश्रु, श्मन्-श्रिञ्=डुन्=पुरुषमुखरोमाणि,

श्यामः, श्यैङ्-मः=हरित् , कृष्णः, पिकः। मरिचम् , सिन्धुलवणं, वा

श्यामा,-शारिका, निशा, अप्रसुताङ्गना।

श्येनः श्यै-इनः = पक्षिणि, पाण्डुरे च ।

श्राव्यः, श्रु-आय्यः=यज्ञपशुः ।

शब्दाः-धातवः-प्रत्ययाः-अर्थाः ।

श्रेणिः, श्रिञ्-निः = पङ्क्तिः ॥

श्रोणः, श्रु-नः = पङ्गुः ।

श्रोणिः, श्रु-निः = कटिः ॥

श्लक्ष्णम् , श्लिष-क्स्नः = सुकुमारम् ।

श्वशुरः आशु—अशूङ्-उरः=पतिपत्न्योः पिता ।

श्वा, श्वि-कन् = कुक्कुरः ।

श्वित्रम् , श्विता-रक् = कुष्ठम् ।

श्वेतः, श्वेङ्-इतः = शुक्लः ।

सक्तुः, षच-तुः = यवादिचूर्णम् ।

सक्थि, षञ्ज-क्थिः = ऊरुः ।

सखा, ख्या-डिः=मित्रं सहायो वा ॥

सन्ध्या, सम्-धाञ्—यक्=सायंकालः ।

सप्त, षप-कन् = संख्याविशेषः ।

संवसथः, सम्—वस—अथः=ग्रामः ।

सरः, सृ-असुः=तडागः ।

सरणिः, सृ—अनिः = श्रेणिः, वर्त्म, शरणिः = वर्त्म ।

सरयुः, सृ—अयु=नदी ।

सरयूः, सृ = अयूः=नदी।

सरलम् , सृ-कलः = पूतिकाष्ठम् , अवक्रम्।

सरलः } अवक्रार्थकद्वयम् ॥
सरला }

सरित् , सृ-इत्=नदी

सर्पिः सृप्—इस् = आज्यम् ।

सर्वः, सृ=वः = समस्तः ।

सर्षपः, सृ = अपः=कटुस्नेहवान् ।

सलिलम् , सल = इलः = जलम् ।

सव्यम् , षुञ्—यः=दक्षिणवामयोः ।

सस्यम् , षस-यः + वृक्षादीनां फलम् ।

साधुः, साध-उण्—सज्जनः ।

सानुः षण—उण्=पर्वतैकदेशशृङ्गबुधमार्गवात्यापर्णवनानि च । सानूनि वा ।

साम, षो—मन् = वेदान्तरे, उपायस्य भेदे च ॥

सारथिः, सृ-अथिः = नियन्ता ॥

सार्थः, सृ-थण्=वणिक्समूहे ।

सास्ना, षस-नक्=गलकम्बलः ।

सिक्थम् , षिक्-थक्=मधूच्छिष्ट सोम इति प्रसिद्धम् , ओदननिर्गतमण्डं वा

शब्दाः—धातवः— प्रत्ययाः —अर्थाः ।
सिन्दूरः, स्यन्दू=उरः — तरुभेदः । क्लीबे रक्तचूर्णम् ।
सिन्धुः-स्यन्दू- उः=देशविशेषः, नदविशेषः, अब्धिः, सरिद्वाच्ये स्त्रीलिंगः ॥
सिमः, षिञ्-मः=सर्वनामसंज्ञः पर्यायः ॥
सीरः, षिञ्—क्रः=अर्कहलयोः ।
सीमा, षिञ्-मन्=अवधिः ॥
सुत्रामा, सु-त्रैङ्—मन् — इन्द्रः ॥
सुरः, षुञ्—क्रः=देवः
सुरा, षुञ्—क्रः-आप्=चषके, मद्ये च ।
सूक्ष्मम् , सूच-स्मः=अत्यल्पम् , कण्टकम्।
सूचः, षिवु — चट्=दर्भाङ्कुरः ॥
सूची, षिवु-चट्—ईप् — सूचीति प्रसिद्धा॥
सूत्रम् , षिवु त्रः=तन्तुः, शास्त्रैकदेशो वा
सूनुः, षूङ्—नुः=पुत्रः, अनुजो वा ।
सूपः, षुङ्—पक्=पक्कं द्विदलान्नं वा ।
सूरः, षृञ्—क = सूर्यः ।
सूरतः, सु रम् क्तः — उपशान्तो दयालुश्च ।
सूरिः, षूङ्—क्रिः—पण्डितः ॥
सृणिः, सृ—निक् — अङ्कुशः ॥
सेतुः षिञ्-तुः=समुद्रः आलुः, कुमारश्च।
सोमः, षुञ्—मः — चन्द्रे, वानरे, कुबेरे पितृदेवे, समीरणे । वसुभेदे, कर्पूरे, नीरे, सोमलतायाञ्च ।
स्तनयित्नुः, स्तन-यित्नुः — मेघः, विद्युद्वा।
स्तबकः, ष्ठा—अबकः = पुष्पगुच्छः ।
स्तम्बः, ष्ठा—अम्बः — शाखाशून्यव्रीह्यादेर्गुच्छः ।
स्तरीः स्तृञ्—ईः — धूमः
स्तिम्भिः, स्तम्भ सौत्रः—क्रिः=समुद्रः ।
स्त्री, स्त्य=ड्रूट्=नारी ।
स्त्येनः, स्त्यै-इनः — चौरः ।
स्तोमः, ष्टुञ्-मः — संघातः ।
स्थविरः, ष्ठा-किरः=वृद्धः, भिक्षुकश्च ।
स्थाणुः, ष्ठा-णुः=शुष्कवृक्षः, निश्चलो वा
स्थालम् , ष्ठा —आलः — पात्रविशेषे ॥

शब्दाः—धातवः—प्रत्ययाः —अर्थाः ।
स्थाली, स्था-आलः-ईप् — पाटलौषधौ ।
स्थिरम् , ष्ठा—किरः — निश्चलम् ।
स्थूणा, ष्ठा-नक्=लोहप्रतिमा गृहस्तंभोवा।
स्पृहयाय्यः, स्पृह—आय्यः=अभीप्सुः, नक्षत्रं वा ।
स्फारम् , स्फायी-रक् — विकटे, करकादेर्बुद्बुदे च ।
स्फिरम् , स्फायी-किरः=तेजः ।
स्यन्दनम् , स्यन्दू—युः=जलादिश्रुतौ, (पुंसि) रथे ।
स्रोतः, स्रु—अम्बुवेगेन्द्रिययोः ॥
स्वरुः-स्वृ-उः-वज्रम् ,
स्वसा, सु-असुः-ऋः=भगिनी ।
स्वादुः, स्वद-उण् — भोज्यमन्नं वा ।
हनुः-हन—उः=कपोलावयवः, प्रहरणं, मृत्युर्वा ।
हरिः, हृ—इः — नारायणः-सर्पः-इन्द्रः-भेकः-सिंहः-अश्वः-सूर्यः-चन्द्रः-वानरो-यमः-वायुर्वा ॥
हरिणः, हृञ्-इनः=सारंगे ।
हारिणी, हृञ्-इनः-ईप्=गणिकायाम् । वृत्तभेदे, हरितायां च ।
हरेणुः, हृञ्-एणुः=कुलयोषित ।
हरित् , हृञ्—इत्=दिक् , वर्णः तृणम् , अश्वविशेषश्च ।
हरितः हृञ्-इतः=वर्णभेदो वा ।
हरिता — हरिणी ।
हविः, हु—इस्=घृतम् ।
हंसिका, हन-सिकः—आप-हंसस्त्री ।
हिमम् , हन-मः=तुषारे मलयोद्भवे ।
हिरण्यम् , हर्य-कन्यः=सुवर्णम् ॥
हृदयम् , हृञ्-कयः=मनः ।
हृषीकम् , हृष-कीकः=ज्ञानेन्द्रियम् ।
हेमन्तः, हन-अन्तः=ऋतुभेदः ।
होता, हु—तृ-हवनकर्ता ।
होमः, हु-मः =देवतोद्देशेन हविः प्रक्षेपनाम ॥

इति शासनपुरुषोत्तमपुरवास्तव्यः श्रीनवकिशोरकरशास्त्रिविरचितः सिद्धान्तचन्द्रिकाया उणादिकोषः समाप्तः ।

* श्रीः *

# सिद्धान्तचन्द्रिकादशगणीय-

# धातुसूची ।

इति सिद्धान्तचन्द्रिकादशगणीयधातुसूची समाप्ता ।

* श्रीः *

# सिद्धान्तचन्द्रिकोत्तरार्द्धस्य

# सूत्रसूची ।

इति सिद्धान्तचन्द्रिकोत्तरार्द्धस्य सूत्रसूची समाप्ता ।

---

## अथ लिङ्गानुशासनसूत्राणां सूची ।

इति सिद्धान्तचन्द्रिकाया लिङ्गानुशासनसूत्राणां सूची समाप्ता ॥